# सम्पादकः
दीपकशर्मा

# सहसम्पादकः
देवेशशर्मा

# प्रबन्धसम्पादकः
विशालशर्मा

# सम्पादकसदस्याः
राधा श्रीमाल
दीपक शर्मा
विष्णु पांचाल

**संस्कृतं जनभाषा भवेत् संस्था**
बी 83 ए, ग्रीन पार्क कॉलोनी, आगरा रोड़, जयपुर (राजस्थान) – 302031

# अनुक्रमणिका


| | | | |
|---|---|---|---|
| १. | संस्कृतदिवसः | – | नारदोपाध्यायः |
| २. | एकं विश्लेषणम् | – | डॉ. वर्षा प्रकाश टोणगांवकर |
| ३. | वर्षा–ऋतुः | – | अखिलेशप्रबलः |
| ४. | काश्यां गङ्गाघट्टाः | – | उषाराणी सङ्का |
| ५. | संस्कृतगीतम् | – | डॉ. रुरुकुमारमहापात्रः |
| ६. | दूरसंचारस्य महत्त्वम् | – | श्रद्धा तिवारी |
| ७. | आशीर्वचनम् | – | वसन्ताश्यामलम् |
| ८. | श्रद्धांजलिः | – | कृपाली |
| ९. | स्कन्दपुराणे अश्वत्थवृक्षस्य विवेचनम् | – | डॉ. गीता शुक्ला |
| १०. | शुण्डायाः भारः हस्तिनन्न | – | तेजस् त्रिवेदी |
| ११. | संस्कृतवार्ताः | – | दिनेश चौबे |

# श्रावणी पूर्णिमा, रक्षाबन्धनम् एवं संस्कृतदिवसः



नारदोपाध्यायः
विज्ञानाध्यापकः,
विश्वनाथः, असमराज्यम्

श्रावणमासस्य शुक्लपूर्णिमातिथौ सनातनधर्मावलम्बिनो जनाः श्रद्धापूर्वकं रक्षाबन्धनपर्व आचरन्ति । अस्मिन् पर्वणि पराह्णव्यापिनी तिथिः गृह्यते । यदि तत् दिनद्वयं यावत् स्यात्, अथवा दिनद्वयं हि न स्यात् तर्हि पूर्वा ग्रहीतव्या । यदि तद्दिने भद्रा स्यात् तर्हि तदपि त्याज्यम् । भद्रायां श्रावणी, फाल्गुनी चेति द्वेऽपि वर्जिते स्तः । यतोहि श्रावण्यां राज्ञः एवं फाल्गुन्यां प्रजायाः अनिष्टं सम्भवति -

**'भद्रायां द्वे न कर्तव्ये श्रावणी फाल्गुनी तथा ।**
**श्रावणी नृपतिं हन्ति ग्रामं दहति फाल्गुनी ।।' इति ।**

एतस्य व्रतस्य विधानम् एवमस्ति -

व्रती अस्मिन् दिवसे प्रातः सविधि स्नात्वा देव-पितृ-ऋषीणां तर्पणं कुर्यात् । मध्याह्नस्य पश्चात् ऊर्णाकपाशरेशमादिभिः निर्मितं पीतवस्त्रम् आदाय तत्र सर्षपं, सुवर्णं, केसरिं, चन्दनं, अक्षतान्, दूर्वाङ्कुरान् च संस्थाप्य, तद्बन्धनं कृत्वा पोटलिकां कुर्यात् । पुनः गोमयेन संलेपनभूमौ कलशस्थापनं विधाय तदुपरि रक्षासूत्रं स्थापयेत्, ततः यधाविधि पूजनं कुर्यात् । तत्पश्चात् ब्राह्मणद्वारा तद्रक्षासूत्रं स्वदक्षिणहस्ते बन्ध्यम् अनेन मन्त्रेण -

**"येन बद्धो बली राजा दानवेन्द्रो महाबलः ।**
**तेन त्वामनुबध्नामि रक्षे मा चल मा चल ।।" इति ।**

अस्मिन् व्रतसन्दर्भे इयं कथा प्रचलिता वर्तते - प्राचीनकाले कदाचित् द्वादशवर्षाणि यावत् देवासुरसंग्रामः प्रचलन् आसीत्, यस्मिन् युद्धे देवानां पराभवः सञ्जातः, ततः स्वर्गे असुराणाम् आधिपत्यम् अभवत् । अनेन दुःखी, पराजितः, एवं चिन्तितः इन्द्रः देवगुरुं बृहस्पतिम् उपसर्प्य उक्तवान् यत् अस्मिन् समये नाहम् अत्र सुरक्षितः, न वा इतः कुत्रापि निर्गन्तुं शक्नुयामिति । अस्यां दशायां मया युद्धं हि कर्तव्यम्, अनिवार्यञ्च अस्ति, यतोहि एतावता अस्माकं पराभवः हि हस्तगतोऽस्ति इति । एतं वार्तालापम् इन्द्राणी अपि शृण्वन्ती आसीत् । सा उक्तवती यत् परेद्युः श्रावणशुक्लपूर्णिमा वर्तते, विधानपूर्वकम् अहं रक्षासूत्रं सज्जीकरिष्यामि, भवान् स्वस्तिवाचनपूर्वकं ब्राह्मणद्वारा तद्बध्नातु । अनेन भवान् अवश्यं विजयी भवेद् इति ।

इन्द्राण्याः कथनानुसारं हि इन्द्रः परेद्युः रक्षाविधानानुसारं, स्वस्तिवाचनपूर्वकञ्च रक्षाबन्धनं ब्राह्मणेन कारितवान्, यस्य प्रभावेण तस्य विजयः अभवत् । तदारभ्य इदं पर्व लोकेऽपि प्राचलत् । अस्मिन् दिवसे सर्वाः भगिन्यः स्वभ्रातृणां हस्ते रक्षासूत्रम् अतीव प्रीतिपूर्वकं, सहर्षञ्च बध्नन्ति ।

अस्मिन्नेव दिवसे आविश्वं संस्कृतदिवसः आचर्यते । अस्मिन् उत्सवे संस्कृतसम्बद्धा शोभायात्रा, विविधप्रतियोगिता, सङ्गीतं, सम्भाषणम् इत्यादिकं कार्यसूच्यनुसारम् आचर्यते, आदिनम् । अनेन कार्येण संस्कृतस्य प्रसारणम्, उज्जीवनं च सम्भवति लोके इत्यत्र न सन्देहः इति, शुभम् ।

# "लागा चुनरी में दाग" {एकं विश्लेषणम्}



डॉ. वर्षा प्रकाश टोणगांवकर
पुणे, महाराष्ट्रम्

भारतीयसंस्कृत्याः महतीविशेषतः कास्ति ? तु भारतीयजनाः पुनर्जन्मस्य सिद्धान्तं मन्यन्ते | पुनर्जन्मस्य कानिचित् तथ्यानि इहजन्मोऽपि वयं द्रष्टुं शक्नुमः अथवा कानिचित् तथ्यानि इहजन्मनि अपि अस्मान् सह आगच्छन्ति, तथा च अग्रिम जन्मोऽपि अस्ति तस्य सदैव स्मरणं कारयति |
" शरीरं नश्वरं अस्ति " एषा उक्ति {वयं}चत्वारवेदारभ्य ते भगवद्गीताया पर्यन्तम् श्रुताः| तत् सर्वेः स्वीकृताः | तर्हि अमर्त्य किम् ? अस्योत्तरं अस्माकं ऋषीमुनौ अयच्छन् -" तदुत्तरं अस्ति - "आत्मा अमर्त्यः/ अमरः इति |

यदा वयं आत्मनः अमरत्वं स्वीकुर्मः तदा पुनर्जन्म सहजतया सिद्धं भवति | एषा विचारधारेव भारतीयसंस्कृत्याः दृढमूलास्ति | एषा विचारधारा अस्माकं चलचित्रजगतोपि स्वीकृतम् | भारतीयचलचित्रजगत् विश्वप्रसिद्धं उद्योगसमूहम् अस्ति | शतशः चित्रपटगीतानी, चलचित्राणि पुनर्जन्मोपरि आधारिता सन्ति | तन्मध्ये मे मतम्–" दिल ही तो है "चलचित्रं १९६३ तमे{त्रिषष्ट्युत्तरैकोनविंशतिशतम} वर्षे प्रदर्शितासीत् | तस्यचित्रपटस्य एकगीतं "लागा चुनरी में दाग " प्रमुखगीतं अस्ति |

एतद् गीतं स्वर्गीय राजकपुरोपरि चित्रितास्ति | यं गीतं मन्ना डे महोदयेन गीयता येषां गीतं साहिरमहोदयेन श्ब्दबद्ध अकुरुत | नितान्त सुन्दरं.मधुरं च एतद् गीतम् |

अस्य प्रारम्भं '' लागा चुनरीमें दाग, छुपाऊं कैसे ? जाके बाबुल से नजरे मिलाऊ कैसे ? इमानि शब्दानि श्रुत्वा सम्यक् विचारतरंगाणि मनसि न आगच्छति |

अग्रिम पङ्क्ति एषा विचारधारा दृढमूला करोति | '' हो गयी मैली मोरी चुनरीया, कोरे बदन सी कोरी चुनरीया ----''एषा पङ्क्ति श्रुत्वा काचित् षोड्श्या प्रेमकथा मनसि आगच्छति | सा कन्या स्वस्य प्रियकररेण सह मेलनं कृतवती तथा च इदानीं सा भयाकुलां अभवत् तेन कारणेन स्वस्य पितुपुरतः गन्तुम् नेऐच्छत्| मलिनंलज्जावस्त्रं दृष्ट्वा पिता स्वस्य विज्ञाकन्यायाः कर्तृत्वं सत्वरम् एव ज्ञायते |

अग्रे वदति–'' भूल गयी सब बचन बिदा के, खो गयी मैं ससुराल में आ के ''-----

एतत् आकर्णयित्वा चिन्तनस्य दिशां परिवर्तिती , कन्या अविवाहिता नास्ति इति | सा मातृगृहं त्यक्त्वा आगतवती तथा च श्वशुरगृहे अतिव्यस्तता कारणेन मातृगृहं विस्मृतवती इति|

मातृगृहात् प्रस्थान समये यानि वचनानि पित्रा दत्तासित् तानि सर्वाणि वचनानि विस्मृतवती तस्य वचनस्य पालनोऽपि न करोति इति |अस्य कारणेन सा भीतास्ति तथा च पितुऽपेक्षया प्रियकरं प्रियतरः अभवत् |

अस्य विचारतरङ्गेण सह अग्रिमा पङ्क्ति कर्णौ आगच्छति---''कोरी चुनरिया आत्मा मोरी-- मैल है मायाजाल---वो दुनियाँ बाबुल का घर–ये दुनियाँ ससुराल–जाके बाबुल से नजरे मिलाऊं कैसे ----? एषा पङ्क्त्यावलि श्रुणवनान्तरं अस्माकं शयनावस्था,स्वप्नावस्था द्वयोपि भग्नौ भवतः | नेत्रयोः कोपि अञ्जनं लेपितं एतादृशी अवस्था अस्माकं भवति | इदानीम् मनसि आगतं

प्रथमविचारोऽपरि ध्यानदत्तं तर्हि ज्ञातुं शक्नुमः यद् गीतस्य विषय तु सर्वथा भिन्नैव | गीतकारेण अत्युत्तमरीत्या इदं विषयं गुम्फ़ितम् आसीत् | गीतोपरि इदानीम् भिन्नं चिन्तनम् आरम्भम्|

'' भूल गयी सब बचन बिदा के–'' अत्र बाबुल = परमात्मा | परमात्मना {अस्माकं} मनुष्यानान् पृथ्व्याम् यदा जज्ञिरे तदा कश्चित् उपदेशं कृत्वा प्रेषितम् अस्ति किन्तु मनुष्याः षड्रिपवः ग्रस्त { काम,क्रोध,लोभ,मोह,मद,मत्सर} भूत्वा तथा च अहङ्कार {यद् तु महानरिपुः}दूरम् तिष्ठन्तु इति परमात्मा अस्मान अवदत् | सातत्येन ''सर्वानुभूती आत्मानम्'' पश्य आदि वचनं उक्त्वा तथा च '' ये दुनियाँ चिडीयां रैन बसेरा'' युष्माकम् पृथ्व्याम् यात्रा कानिचित् दिनानि एवास्ति | एतद् सततं मनसि स्थापयतु आदि उपदेशित्वा प्रेषितवान च|

'' नैनं छिन्दन्ति शस्त्राणि, नैनं दहति पावकः|''अयं बोधयित्वा प्रेषितः| सततं मनसि ईश्वरस्य ध्यानं करणीयं तथा च कोऽहं, कुतस्त्वा आगतं, कुत्र गमनीयम् इति अन्वेषणम् सातत्येन करणीयम् आदि उपदेशित्वा प्रेषितः च | किन्तु वयं मनुष्याः पृथ्वीरूपेण श्वशुरगृहं आगत्य सर्वैः विस्मृतवन्तः | कुतः गमिष्यामि,कः अस्माकं जन्मदातारः? वयं स्वस्य साक्षात् मातृगृहं विस्मृतवन्तः च | देहेव सर्वस्व अभवत्| भौतीक सुखेव सर्वस्व इति मन्यन्ते,पार्थिव सुखे जनाः सम्पुर्णतया लिप्ताः| धनं,विषयं,वासना,कृत्रिमता इत्यादि मनुष्यानाम् ध्येयास्ति अधुना | मनुष्याः विस्मृताः,अस्मान् स्वस्य मातृगृहं आवश्यकं गमनीयं च| अस्माकं गृहं अस्मान् प्रत्यागमनम् अस्ति | एतद् गृहं तु भाटकितम् अस्ति इति |

अन्ततः मातृगृहं गमनस्य समय /वेला समीपं आगच्छति तदा ध्यानं आयाति यद् मम उत्तरीयं तु पूर्णरूपेण मलिनम् अभवत् | सम्प्रति अहं कथं

मातृगृहं गमिष्यामि ? पित्रासह कथं नेत्रमिलनं करिष्यामि? आजीवनं यानि कर्माणि कृता तस्य आयव्ययः कथं वदिष्यामि?

जन्मसमये यानि वचनानि पितारुपि परमात्माने अस्मद्तः आदत्ते तानि वचनानि मया कदापि न ध्रियते | किन्तु मनुष्यानाम् भ्रमैव ते विस्मृतवन्त---- '' कोरी चुनरियां आत्मा मोरी----''

आत्मा तु कुत्रापि लिप्तं नास्ति | स तु सदैव प्रत्यग्रमेव {नूतनतमेव}, किन्तु मम दृष्टेव धूसरा| माम उत्तरीयरूपी आत्मनि मलिनता दृश्यते तद तु ममैव दृष्टिदोष | तदैव मायाजालम्| ''ब्रहम सत्य जगन्मिथ्या ''| कानिचित् उत्तमानि कर्माणि, ज्ञानं, भक्ति, वैराग्यं एतैः माध्यमेन मायाजालरूपी मलीनता दूरी कर्तुं शक्यते | मे उत्तरीयं पुनः स्वच्छं कर्तुं शक्यते |अहं शान्तमनसा कलङ्करहित उत्तरीयेण सह श्वशुरगृहतः मातुगृहं गन्तुम् शक्नोमि | परमात्मनः पुरतः तिष्ठुं शक्यते |

आवश्यकम् अस्ति स्वात्मानः परिचयम्| कियत् महत्वपूर्णं,अर्थपूर्णं नयनौन्मिल्यं गीतम् इदम्| कियत् सुन्दरं, मधुरं च गीतम् |

अत्र साहिरमहोदयेन अन्तिमापङ्क्त्या भारतीयसंस्कृत्या,भारतीयदर्शनस्य सारेव अवतारणम् अस्ति |

**भवन्तोऽपि मया सह सहमत अस्ति वा ?**

# वर्षा-ऋतु:



अखिलेशप्रबल:
प्रवक्ता (संस्कृतम्)
दयानन्द इण्टर महाविद्यालय:, इटैली,
मऊ, उत्तरप्रदेश:

वर्षात्वागतः, हृदयं उत्साहपूर्णं,
वृक्षाः प्रणमितुं आरब्धाः||
सुपारीपत्राणि पादमार्गं स्पृशितुं आरब्धानि, आम्रवृक्षः टिङ्गुलाभिः पूरितः||
वर्षात्वागतः, हृदयं उत्साहपूर्णमासीत्|||
नदी शिथिलतां ग्रहीतुं आरब्धा, आवरणः चलितः,
अश्वथ:अपि वृद्धाः इव प्रणामं कृतवन्तः।।
अम्मायाः अङ्क इव सरिता उत्थिता।
अस्मिन् मानसूनस्य लाडने मम प्राङ्गणं आर्द्रं जातम्।।
मम शरीरं मनः च आर्द्रं कुरुत।
जलबन्धः एवं भग्नः अभवत्।
अश्रुधारा यथा भवति।।
तत् बाल्यदिनं स्मर्यताम्
वर्षा ऋतुः आगतः, हृदयं उत्साहपूर्णं।
वृक्षाः प्रणमितुं आरब्धाः||
सुपारीपत्राणि पादमार्गं स्पृशितुं आरब्धानि,
आम्रवृक्षः टिङ्गुलाभिः पूरितः||
वर्षा ऋतुः आगतः, हृदयं उत्साहपूर्णम् आसीत्|||

# काश्यां गङ्गाघट्टाः

तीर्थक्षेत्रं नाम नदीप्रवाहम् अभितः स्थितं किञ्चन स्थानम्। यत्र सरिद्वाहः तत्र पवित्रता इति कारणात् पुण्यक्षेत्रमपि तस्मिन् स्थाने अवश्यम्भावि। तादृशी पुण्यनगरी काशी- यत्र नित्यप्रवाहिनी अमरतटिन्यपि राजते, ज्योतिर्लिङ्गेष्वन्यतमः श्रीविश्वनाथोपि राराजतेतराम्।

गङ्गायाः महिमा अपारः। तस्यां स्नातः सर्वपापैः प्रमुच्यते इति कारणात् सकृदपि अवगाहितुं स्नातुं चोत्सहन्ते जनाः। स्नानाकुलातासिद्ध्यर्थं नद्याः कूलावाश्रित्य घट्टाः केचन निर्मिताः। ते जनानाम् उपयोगाय विविधैः राजभिः, महात्मभिः, सत्पुरुषैः, पुण्यजनैः च निर्मापिताः तेषां नामभिः विराजन्ते। यथा- अहल्याबाईघट्टः राज्ञ्या अहल्यया कारितः। अन्ये पुराणप्रसिद्धिस्थालानि- यथा- मणिकर्णिकाघट्टः, हरिश्चन्द्रघट्टः यौ श्माशनावपि, यत्र हिन्दूजनानां अन्त्येष्टिः निरुह्यते। तुलसीघट्टः तुलसीदासस्य नाम्ना प्रसिद्धः, नारदघट्टः महर्षेः अभिधानेन च। दशाश्वमेधघट्टे असीघट्टे च गङ्गायाः महानीराजनं यत् गङ्गा-आरतिनाम्ना प्रसिद्धं, तत् महता वैभवेन क्रियते। आपगायां नौकायां चलन्तः आरतिं पश्यामः, तदानीं धन्यतामनुभवामः।

स्नानसम्बन्धिषु कार्येषु भक्तजानानां सौकर्यं यथा तथा निर्मिताः एते घट्टाः आहत्य अशीतिः सन्ति वाराणस्याम्। विविधवर्णैः अश्मभिः विलसन्तः, दीर्घसोपानैः शोभिताः एते घट्टाः अनेकभक्तियुक्तेभ्यः कार्यक्रमेभ्यः नितराम् अनकूलाः सन्ति। यथा- कार्तिकमासे लघुदीपावल्युत्सवे लोकाः सर्वत्र घट्टेषु किञ्चिदपि स्थानम् अविहाय दीपप्रज्वलनेन अलङ्कुर्वन्ति। तथैव शिवरात्रौ विविधाः यज्ञाः क्रियन्ते विविधैः यात्रिभिः।

वृष्टिकाले वियत्सरितः वर्धितं जलं घट्टान् अवगाहयति। तदा विहाय अन्यदा नागरिकाः जनाः तान् घट्टान् स्थानात् स्थानं प्रति गमनाय, इतस्ततः भ्रमणाय, चलनाय च प्रयुञ्जन्ति। अनेके साधवः, मुमुक्षवः गेहत्यागिनः तत्र वासं प्रकल्प्य जीवन्ति।

घट्टेषु शिवलिङ्गानि अपि नैकेषु स्थलेषु दृश्यन्ते, यत्र जनाः स्नात्वा पुनीताः भूत्वा अभिषेकं कुर्वन्ति, तरन्ति च संसारसागरात्।

घट्टेषु यत्र क्वचिदपि उपविश्य शान्तभावेन प्रवहन्तीं स्वर्गङ्गां पश्यामः तदानीं काचित् अलौकिकामनुभूतिमनुभवामः। सकृत् गत्वा पश्यामः, असकृत् स्मरामः। यदा यदा स्मृतिपथमायान्ति घट्टाः, तदा तदा प्रफुल्लभावः हृदयमाक्रम्यति॥
इति अलं विस्तरेण।




✍ उषाराणी सङ्का
तिरुपतिः, आन्ध्रप्रदेशः

# यशस्वतीमातरं ब्रूते नन्दलालः

(Sanskrit version of Hindi film song - यशोमती मैया से बोले नन्दलाला)

यशस्वतीमातरं ब्रूते नन्दलालः/नन्दबालः

राधा किं श्वेता/गौरी, अहं क्व नु कालः

राधा किं श्वेता/गौरी, अहं क्व नु कालः -------- (००)

स्मितास्या हि जाता माता, तनयम् अवोचत्

स्मितास्या हि जाता माता, तनयम् अवोचत्

कालतिमिरितानिशि मम त्वम् आयातः

ललितः कन्हैया मे ही हो ....

ललितः कन्हैया मे ही, कालवंशीचालः

अत एव कालः

यशस्वतीमातरं ब्रूते नन्दलालः

राधा किं श्वेता, अहं क्व नु कालः

राधा किं श्वेता, अहं किं नु कालः ------------- (०१)

स्मितास्या हि ब्रूते माता, शृणु स्नेहितो मे

स्मितास्या हि ब्रूते माता, शृणु स्नेहितो मे

(अथवा - स्मितास्या हि ब्रूते माता, स्नेहितः शृणु मे)

श्वेता श्वेता राधिका हि, दृशि आञ्जनेया

कज्जलाधारिणी सा हि, हो ....

कज्जलाधारिणी सा हि, त्वयि इन्द्रजालम्

अत एव कालः

यशस्वतीमातरं ब्रूते नन्दलालः

राधा किं श्वेता, अहं क्व नु कालः

राधा किं श्वे ता, अहं किं नु कालः ------------- (०२)






डा. रुरुकुमारमहापात्रः

अध्यापकः, राष्ट्रियसंस्कृतविश्वविद्यालयः, तिरुपतिः

# दूरसञ्चारस्य महत्त्वम्



श्रद्धा तिवारी
मध्यप्रदेशम्

ये संचारव्यवस्थाः केवलं ध्वनिशब्दद्वारा एकस्मात् स्थानात् अन्यस्मिन् स्थाने सन्देशान् प्रसारयितुं स्वीक्रियन्ते, ते दूरसञ्चारः इति उच्यन्ते । सभ्यतायाः विकासेन सह दूरसञ्चारव्यवस्थायां निरन्तरं सुधारः भवति । प्राचीनकाले राजानः सम्राट् च विभिन्नराज्येभ्यः डागरद्वारा जनान् प्रति सन्देशान् प्रेषयन्ति स्म । आधुनिकयुगे तार-दूरभाष-उपकरणानाम् आगमनेन भिन्न-भिन्न-स्थानेषु सन्देश-प्रेषण-कार्यं द्रुततरं जातम् । फलतः अल्पकालान्तरे एव विभिन्नानां व्यक्तिनां, संस्थानां च परस्परं सन्देशस्य आदानप्रदानस्य अवसरः प्राप्तः । अधुना दूरसञ्चारस्य मुख्यः अर्थः वर्तमानकाले लोकप्रियेन तारपत्रेण, दूरभाषेण, फ्याक्सेन इत्यादिना सन्देशान् प्रेषयितुं भवति । विभिन्नेषु सर्वकारीयकार्यक्रमेषु, वाणिज्ये, जनस्य निजीजीवने च दूरसञ्चारव्यवस्थानां महत्त्वपूर्णा भूमिका अस्ति ।दूरसञ्चारस्य आवश्यकतायाः विषये जागरूकतां जनयितुं प्रतिवर्षं मेमासस्य १७ दिनाङ्के विश्वदूरसञ्चारदिवसः आचर्यते। अन्तर्राष्ट्रीयदूरसञ्चारसङ्घस्य स्थापना १८६५ तमे वर्षे मेमासस्य १७ दिनाङ्के अभवत् । निर्धनानाम् विकासशीलदेशानां च समुचितसूचनासेवाप्रदानाय अयं क्षेत्रः स्थापितः अस्ति ।सम्पर्कं वर्धयितुं सहायतां कुर्वन्ति ।

दूरसञ्चारः जनानां मध्ये सम्बन्धं स्थापयितुं साहाय्यं करोति । दूरसंचारः युवानां पीढीभिः सह सम्बन्धनिर्माणार्थं सफलं माध्यमम् अस्ति । कुत्रापि केनापि

सह संवादं कर्तुं साहाय्यं करोति । शिक्षायाः विकासे विचारविनिमये च साहाय्यं करोति । दूरसञ्चारः दुर्गमस्थानेषु गन्तुं शक्नोति तथा च व्यक्तिस्य जीवनशैलीं प्रभावितं कर्तुं शक्नोति । यदा कस्यचित् कारणात् मित्रस्य समीपं गन्तुं न शक्यते तदा दूरसञ्चारद्वारा संचारः भवति । अतः सम्बन्धः अक्षुण्णः एव तिष्ठति ।

मानवसमाजस्य कृते वरवत् अस्ति। सूचनाप्रौद्योगिक्याः क्रान्तिकारीलाभाः अधुना सर्वत्र सन्ति । युवानां आत्मविश्वासं वर्धयितुं उन्नत ई-शिक्षाव्यवस्था क्रियते। सामान्यतया संचारार्थं दूरस्थस्थानेषु सन्देशप्रेषणं दूरसञ्चारः इति कथ्यते । अस्मिन् विषये अस्माकं जीवने दूरसञ्चारस्य भूमिका महत्त्वपूर्णा अस्ति। अद्यत्वे मनुष्यः द्रुतविचारविनिमयद्वारा महतीं प्रगतिम् करोति। अस्य सामाजिकः, सांस्कृतिकः, आर्थिकः च प्रभावः अद्यतनसमाजस्य उपरि अनुभूयते । जनान् समीपं आनयितुं दूरसंचारः अग्रणी अस्ति । यस्य हस्तलिखितवार्ता प्राप्तुं मासान् प्रतीक्षितव्यम् आसीत्; इदानीं सा सर्वा वार्ता न्यूनसमये दूरभाषेण उपलभ्यते। मोबाईलफोन-अन्तर्जालयोः साहाय्येन कस्यापि घटनायाः दत्तांशः, चित्राणि च अल्पकाले एव सुलभतया प्राप्तुं शक्यन्ते । जलप्रलयः, तूफानः, भूकम्पः इत्यादयः प्राकृतिकाः आपदाः भवन्ति चेत् साहाय्यं करोति ।भारते दूरसंचारः

भारतस्य ग्राम्यक्षेत्रेषु अधिकाः जनाः निवसन्ति । तेषां विशेषसूचनाः, उत्तमसञ्चारसुविधाः च दातव्याः सन्ति । नगरेषु अधिकानि दूरभाषाणि कार्यं कुर्वन्ति । मोबाईलफोनस्य प्रसारेण ग्राम्यक्षेत्रेषु ग्राहकानाम् संख्या वर्धमाना अस्ति ।

भारते सेलफोनकम्पनयः लोकसेवायां प्रवृत्ताः सन्ति । एयरटेल्, रिलायन्स् जियो, वोडाफोन्, बीएसएनएल इत्येतयोः ग्राहकानाम् संख्या वर्धमाना अस्ति । सेवाप्रदातृभिः इदानीं प्रतिस्पर्धात्मकविपण्ये उत्तमसेवाप्रदानाय कार्यं

कर्तव्यम्।अन्तर्राष्ट्रीयस्तरस्य दूरसञ्चारः विकसितदेशेषु दूरसंचारसंरचना सुदृढा अस्ति । अस्माकं देशे नगरक्षेत्रेषु दूरघनत्वं ३०% अधिकं भवति, ग्राम्यक्षेत्रेषु तु अतीव न्यूनम् । अमेरिका-देशे, आस्ट्रेलिया-देशे च दूर-कार्यं प्रायः शतप्रतिशतम् अस्ति । एतस्याः समस्यायाः समाधानं करणीयम्। अधुना एकस्मात् देशात् अन्यतमं देशं प्रति सन्देशं प्रेषयितुं सुलभं जातम् । सेवाप्रदाने पक्षपातः न भवेत्। आशास्ति यत् दूरसञ्चारः अधिकनिष्पक्षसूचनासमाजस्य निर्माणे सफलः भविष्यति

भिन्नभिन्नमाध्यमेन दूरसञ्चारस्य प्रसारेण अधिकाधिकं लोकप्रियं भवति । अनेके मध्यमवर्गीयाः, निम्नमध्यमवर्गीयाः, पश्चात्तापवर्गाः च अधुना स्वगृहेषु दूरभाषसेवायाः लाभं लभन्ते । नगरेषु ग्राम्यक्षेत्रेषु च बहूनां निजीदूरभाषबूथानां आगमनेन दूरसञ्चारसेवाः अधिकव्यापकाः अभवन् । अस्य प्रसारः लोकप्रियता च निकटभविष्यत्काले अधिकं वर्धते इति अपेक्षा अस्ति ।


## ग्राहकशुल्कविवरणम्

| | | |
|---|---|---|
| वार्षिकम् | - | रू. १२०/- |
| द्वैवार्षिकम् | - | रू. २४०/- |
| त्रैवार्षिकम् | - | रू. ३५०/- |

Paytm, Phonepe & Googlepay - 9314594380

# आशीर्वचनम् (कथा- 1)



वसन्ताश्यामलम्
नागपुरम्

श्रीरामचन्द्रमहोदयस्य सुपुत्र्याः विवाहः श्रीकृष्णविवाहमण्डपे अद्य प्रचलति| विवाहमुहूर्तवेला दशवादनतः एकादशवादनपर्यन्तम्| प्रातः भोजनम् अर्थात् अल्पाहारं सप्तवादनतः नववादनपर्यन्तम् भविष्यति| अधुना सप्तवादनम्| प्रातः अल्पाहारस्य कृते आगन्तुकाः उपविशन्ति| मिष्टान्नेन सह अन्य स्वादिष्टपदार्थान् परिवेषयन्ति पारिवेषकाः|

मदनस्य पत्नी पृष्टवती- हरितवर्णशाटिका धरामि उत नीलवर्णशाटिका?- इति| मदनः उत्तरितवान्- का अपि धर| परन्तु सम्यक्-शीघ्रम् अलङ्कारं समाप्य आगच्छ| विलम्बेन न गन्तव्यम्| मदनः त्वरितगत्या स्वपत्न्यासह विवाहमण्डपे प्रवेशं कृतवान्| तत्र सर्वे प्रातः अल्पाहारं खादितुमारब्धवन्तः|

मदनः अन्यागन्तुकानां समीपे उपविश्य खातितुमारब्धवान्| तस्य पत्नी अपि स्व पतिसमीपे उपविश्य खादितुमारब्धवती| तस्याः मुखे चञ्चलः दृष्टः| मदनः उक्तवान्- “किमेवं करोषि? चञ्चलमनसा न खाद| आवां अनन्तरं वध्वोः पित्रा सह वार्तालापं करिष्याव| अधुना सः व्यस्तः स्यात्|”

इदं श्रुत्वा निकटे खादन् महोदयः उक्तवान्- “आम् भगिनि! सः अधुना व्यस्तः| पूर्वं खादतु, अनन्तरं तस्य मेलनं करोतु| का अपि न समस्या|”

तस्य वचनं श्रुत्वा अपि मदनस्य पत्न्याः मुखे स्तिथः भावः न अपगतः| येन केन प्रकारेण प्रातरशनं समाप्तम्|

मदनः किञ्चित् सङ्कोचेन शनैः शनैः अन्तः गतवान् यत्र विवाहः भविष्यति| तत्र उपस्थितं एकं सज्जनं मदनः पृष्टवान्- "महोदय! अहं वरपक्षः| अहं वध्वोः पितरं द्रष्टुमिच्छामि| कृपया वदतु सः कः इति"

सः उक्तवान्- तत्र सः अस्ति यः हरितवर्ण-अङ्गवस्त्रं धृतवान किल? सः एव वध्वोः पिता" | सः शनैः शनैः वध्वोः पितासमीपं गतवान्|

"महोदय! अहं एकां वार्तां वक्तुमिच्छामि| कृपया एकान्तस्थानं गच्छाव|"

श्रीरामचन्द्रमहोदयस्य् मनसि भीतिः, शोकः, संशयः च उदभवन्ति| एषः महोदयः किं वदिष्यति| बहु प्रयासेन एषः वरं प्राप्तवान् अहम्| एषः वरविषये किमपि गोपनीयविषयः अस्ति वा! हरे कृष्ण मां रक्षतु|

मदनः श्रीरामचन्द्रेन सह एकान्तप्रकोष्टे पञ्चनिमेषपर्यन्तं वार्तां करोति स्म|

अधुना मदनः च श्रीराचन्द्रः च बहिरागतवन्तौ|

श्रीरामचन्द्रमहोदयः पाचकमाहूय उक्तवान्- "एषः मम अग्रजः| बहुदिनानन्तरं वयं मिलावः| सः एव विवाहस्य मुख्यातिथिः| सः सम्मानयोग्यः| तस्मै मिष्टान्नं ददातु| भोजनसमये सम्यक् परिवेषयतु| तस्य सहधर्मिणी अपि अत्र अस्ति| सा अपि सम्मानयोग्या"

इदं श्रुत्वा मदनः किंकर्तव्यविमूढः अभवत्|

एतां सर्वघटनां पश्यन् वरस्य पिता पृष्टवान्- "हे रामचन्द्रमहोदय! किमभवत्| स्पष्टतया वदतु| अद्य पर्यन्तं भवान् एवं न व्यावहरत्| यदा सः -तस्य नाम मदनः इति चिन्तयामि- यदा सः एकान्ते किमपि उक्तवान् तदा प्रभृति भवतः व्यवाहरे परिवर्तनं दृश्यते| वदतु| गोपनीयविषयः कः अपि अस्ति वा?"

श्रीरामचन्द्द्रमहोदयः हर्षेण उक्तवान्- "वदामि| महोदय वदामि| सः एकान्ते यत् उक्तवान् तदहं वदामि|

सः एकान्तप्रकोष्टं गत्वा मम पादं गृहीत्वा एवमुक्तवान्-

'महोदय! क्षम्यताम्! क्षम्यताम्! अहं भवन्तं न जानामि| कस्य विवाहः इत्यपि न जानामि| तथापि अत्र् आगम्य अल्पाहारं कृतवान् पत्न्या सह| मा चिन्तयतु अहं चोरः| बुभुक्षापीडितौ आवाम्| बुभुक्षाशमनार्थम् आवं अत्र आगत्य अल्पाहारं खादितवन्तौ| अन्य किमपि मम उद्देश्यः न| वर-वधूनां कृते दातुं मम समीपे किमपि नास्ति| केवलं मनसा आशीर्वादं ददामि| क्षमा याचे|'-इति|

"एषा एव घटिता घटना| तदनन्तरमेव मम मनसि एवं चिन्तनमुदभवत्| अहं मम पुत्र्याः विवाहं कारयामि| प्रचुरधनव्ययं करोमि| अनेकबन्धुबान्धावानां कृते निमन्त्रणपत्रं प्रेषितवान्| सर्वे आगन्तुकाः धनाढ्याः| कोऽपि न निर्धनः| सर्वे अगत्य भोजनं करिष्यन्ति| उपहारमपि दास्यन्ति| सर्वे एवं चिन्तयन्ति यत् मम उपाहारः एव सर्वेषु उपहारेषु श्रेष्ठतरः|- इति स्वस्य धनिकत्वं प्रकटीकुर्वन्ति| उपहारदानसमयेऽपि ते एवं चिन्तयन्ति यत् छायाचित्रे मम मुखं स्पष्टतया दृश्यते वा? इति|

परन्तु मदनः बुभुक्षापीडितः| अत एव अत्र आगत्य खादितवान्| तदनन्तरं तस्य मनसि दोषभावः उदभवत् स्यात्| अत एव मां मिलित्वा स्व दोषं स्वीकृत्य मां क्षमां याचितवान्| तदनन्तरं वर-वधूनां कृते आशीर्वचनं मनसा दत्तवान्| तस्य आशीर्वचनं महत्वपूर्णम्| सः किमपि उपहाररूपेण न दत्तवान्| तस्य आशीर्वचनमेव उपहारः इति मत्वा एव मया तथा आचरितम्|"

श्रीमद्भगवद्गीद्तायां श्रीकृष्णेन भणितम्-

दातव्यमिति यत्दानं दीयतेऽनुपकारिणे|

देशे काले च पात्रे तत्दानं सात्विकं स्मृतम्||(17-20)

स्वरचना प्रकाशनार्थं प्रेषयन्तु – 9314594380

# श्रद्धांजलिः



कृपाली
पालितानानगरम्

त्वं मह्यं रक्तं देहि अहं त्वां स्वाधीनतां दास्यामि। भारतस्य स्वाधीनतासंग्रामे एकम् ऊर्जावानदलम् आसीत् । तद् दलम् "ऊष्णदलम् " नाम्ना प्रसिद्धम् आसीत्। दलस्य नेता सुभाषचन्द्र बोसः आसीत्। भारते अतिअहिंसावादः वर्धते स्म। अतिअहिंसावादस्य कारणाद् जनाः कापुरुषाः भवन्ति स्म। तदानीमेव सुभाषचन्द्र बोसः "आजाद हिन्द फौज" नाम्नम् एकं सैन्यदलं रचितवान्। सैन्यदले अनेके युवकाः युवत्यः संलग्नाः अभवन्। स्वतन्त्र-हिन्द-सेनायाः सैनिकाः आँग्लजनानाम् अन्यायं न सहन्ते स्म। शस्त्रप्रहारस्य प्रत्युत्तरं शस्त्रप्रहारेण एव ददति स्म। आँग्लशासकाः तैः बहु पीड़िताः आसन्। अतएव आँग्लशासकाः नम्रदलस्य समर्थकाः आसन्। आँग्लशासकेभ्यः सुभाषचन्द्रबोसः न रोचते स्म। आँग्लजनाः सुभाषचन्द्र बोसस्य रहस्यम् अद्य पर्यन्तं गोपितवन्तः। वस्तुतः सः वीरः आसीत् ।सुभाषचन्द्राय वयं श्रद्धाञ्जलिं दद्मः।



# स्कन्दपुराणे अश्वत्थवृक्षस्य विवेचनम्



डॉ. गीता शुक्ला
एसो. प्रो.,
संस्कृतविभागाध्यक्षः,
भ.दी.आ.क.स्नातकोत्तर महाविद्यालयः,
लखीमपुर,खीरी

पर्यावरणप्रदूषणनिवारणे दिव्योपायं तु वृक्षारोपणमेव । अस्माकं पूर्वजाः ऋषयः महर्षयश्च पर्यावरणविषये दत्तचित्ताः आसन् ।पद्मपुराणस्य उत्तरखण्डे उक्तं यत् -

**'वृक्षरोपी नरकं न याति'** (1)

महाभारतस्य अनुशासनपर्वणि वृक्षारोपणविषये उक्तमेतत् -

**कीर्तिश्च मानुषे लोके**
**प्रेत्य चैव फलं शुभम् ।**
**अतीतानागतौ चोभौ**
**पितृवंशो महामुने ।**
**तारयेत् वृक्षरोपी च**
**तस्मात् वृक्षांस्तु रोपयेत् ।।** (2)

स्कन्दपुराणे वृक्षवर्णनप्रसंगे एका रम्या कथा विद्यते। एकदा भगवान्विष्णुः वनस्पतिसु त्रिगुणशक्तियुतां दृष्टवा काममोहान्वितेन आसक्तोऽभवत् ।

**स्त्रीरूपिण्यै वनस्पत्यै**
**दृष्टवा विष्णुस्तदाननम् ।**
**उत्तस्थौ संभ्रमावृन्दा**
**रूपातिशयविभ्रमः।**

**दृष्ट्वा च याचितेमोहात्**
**कामासक्तेनचेतसा।।(3)**

ईश्वरः त्रिगुणभेदेन पृथक् पृथक् स्वरूपे प्रकृतौ विभाति । प्रकृतिरपि त्रिषु रूपेषु वृक्षाश्रितेन विश्वस्य रक्षति ।

**अहमेव त्रिधा भिन्ना**
**तिष्ठामि विविधैः गुणैः ।**
**लक्ष्मीगौरीस्वराचेति**
**रजस्सत्त्वतमोगुणैः।।(4)**

पृथिव्यां सर्वत्रैव यत्रापि ये ये वृक्षाः अलंकुर्वन्ति ते सर्वे ईश्वरबीजसम्भवाः।

**क्षिप्तेभ्यस्तत्र बीजेभ्यो**
**योऽभवन् वनस्पतिसु।।(5)**

अत्र वृक्षाः पुरुषस्वरूपा सन्ति लता स्त्रीस्वरूपा प्रतिभाति। वर्तमानकालेपि वृक्षेषु वनस्पतिषु च त्रिषुप्रकारेषु गुणाः जायन्ते । क्वचित्तु समष्टिभेदेन एक एव हरिः सकलवृक्षेषु निवसति ।

**एको हरिः सकलवृक्षगतो विभाति**
**नानारसैस्तु परिभावितमूर्तिरेव ।। (6)**

तेऽपि व्यष्टिभेदेन वृक्षाश्रयन् वनमध्ये विचरन् व्यष्टिभेदेन अश्वत्थवृक्षे एव न्यवसत् ।अश्वत्थस्य मूलभागे विष्णुः शाखासु नारायणः पत्रेषु हरिः फलेषु च अच्युतः ।

**मूले विष्णुः स्थितो नित्यं**
**स्कन्धे केशव एव च।**
**नारायणस्तु शाखासु**
**पत्रेषु भगवान् हरिः ।**
**फले अच्युतो न सन्देहः**
**सर्वदेवैःसमन्वितः।(7)**

वृक्षेऽस्मिन् गुणभेदेन पृथक् पृथक् अर्थो विभाति। श्रीमद्भगवद्गीतायामपि विष्णुना प्रोक्तम् -

**'अश्वत्थः सर्ववृक्षाणाम्'** (8)

अर्थात् ईश्वरीयसत्तायाम् वृक्षाःएव सकलप्राणिनां आश्रयः सन्ति । वस्तुतस्तु प्राकृतिकसम्पदासु विशेषरूपेण वृक्षाणामेव गणना कृता।

अश्वत्थवृक्षस्य परितः वातावरणं शुद्धः स्वास्थ्यानुकूलञ्च भवति । अतएव अश्वत्थस्तु प्रतिदिनं सेवनीयः विशेषतः शनिवासरे।

**अश्वत्थोऽतः सदा सेव्यो**
**मन्दवारे विशेषतः ।**
**नित्यमश्वत्थसंस्पर्शात्**
**पापक्षयं सहस्रधा।।(9)**

सोमवतीअमावस्यायाः पूजनमपि अश्वत्थवृक्षे एव भवति ।

**अश्वत्थः पूजितं सिक्तं**
**सर्वभूतसुखावहम् ।**

**नित्यमश्वत्थसंस्पर्शात्**
**पापक्षयं सहस्रधा।। (10)**

अश्वत्थवृक्षं दृष्ट्वा सदैव अवश्यमेव सदैव नमस्क्रियेत् । ये जना: अश्वत्थं न नमस्यन्ति ते नारकी भवन्ति ।

**सर्वभूतगतो विष्णुराप्याययति वै जगत् ।**
**तथाऽश्वत्थगतं विष्णुं यो नमस्येन्न नारकी ।(11)**

यतोहि पर्यावरणदृष्ट्या अश्वत्थवृक्षस्य महत्त्वं सर्वोपरि मन्यते। अयमेव वृक्षः सर्वाधिकं प्राणभूतं वातम् उत्सृजति । हानिकारकम् अस्वास्थ्यकरं कॉर्बनडाइआक्साइडवातम् अवशोषयति। अस्याधः स्थितेन मन: प्रसन्नतां याति ।

---

## सन्दर्भाः --


1- पद्म. पु. उ. ख. 27
2- महा.अनु.51/23,24
3- स्क.पु. 4/23/1
4- स्क. पु. 4/22/24,25
5- स्क.पु. 6/247/24
6- स्क. पु. 6/649/19
7- स्क.पु.6/247/37
8- श्रीमद्भगवद्गीता 10/26
9- स्क. पु. 6/247/28
10- स्क. पु. 6/247/28
11- स्क.पु.6/247/ 27

# शुण्डायाः भारः हस्तिनन्न



"अज्ञानः"
तेजस् त्रिवेदी

एकं सुन्दरं वनं आसीत् | तस्मिन् वने पक्षिणः प्राणिनश्च सुखेन अवसन् | बहवः पादपाः तस्य वनस्य शोभां वर्धयन्ति स्म | तस्मिन् वने निर्मलतया गम्यमानायाः नद्याः जलं सर्वे अपिबन् | तस्मिन् वने द्वयोः मित्रयोः मैत्री सुदामकृष्णयोरिव प्रसिद्धा आसीत् | एकः आसीत् मोन्टु नाम्नः हस्ती एवं द्वितीयः छोटु नाम्नः शशकः | यदा कदापि उभौ मित्रे जलपानार्थं नद्याः तटे अगच्छताम् | तदा शशकः हस्तिनं पीडयति यत् “भवता तु शुण्डायाः भारः निरर्थकः वहन् अस्ति, जलमपि कियत् आवश्यकं ! मम तु महत् सौभाग्यं यत् यत्रकुत्रापि जलं पीत्वा शीघ्रं गच्छन् अस्मि | भवत इव समयस्य व्ययः अपि न भवति |” हस्ती एतत् शान्तः भूत्वा वारं वारं श्रुतवान् परन्तु कदापि प्रत्युत्तरं न दत्तवान् |

एकस्मिन् दिवसे तस्मिन् वने भीषणः अग्निः सर्वत्र प्रसार्यमाना आसीत् | अग्नेः प्रकोपेण पशवः पक्षिणश्च धावतः आसन् | तदैव मोटु नामाख्यया हस्तिना स्वेषां मित्राणि आवाह्य एकां युक्तिं रचयन् कथितवान् | सर्वे हस्तिनः नद्याः तटे गत्वा स्वस्य शुण्डायां जलं प्रपूर्य आनयन् एवं यत्र वायुना वर्धमाना अग्निः आसीत् तस्मिन् दिशि वृक्षस्य उपरि जलाभिषेकः कृतवन्तः | जलं अग्नेः शामकमिति सिद्धान्तानुसारं शनैः शनैः वर्धमाना अग्निः शमति | मोटु नाम्नः हस्तिनः कार्यं दृष्ट्वा सर्वे मोदमानाः पशवः पक्षिणश्च तं हस्तिनं अभिनन्दयन्ति | सर्वे वनवासिनः हस्तिनः आभारं मन्यन्ते | तदैव छोटु नाम्नः शशकः स्वस्य मित्रं हस्तिनं हस्तौ बद्ध्वा अकथयत् यत् “ शुण्डायाः भारः हस्तिनं नैव खलु !”

**बोधः - अन्यस्मिन् दृश्यमाना अपर्याप्तता तस्य वैशिष्ट्यं अपि भवितुं शक्यते |**

# संस्कृतवार्ता:

## पाणिनिसंस्कृतविश्वविद्यालयस्य पञ्चदशस्थापनादिवससमारोह: सुसम्पन्न:

**वार्ता संयोजकः - डॉ.दिनेश: चौबे**

उज्जयिनीस्थमहर्षिपाणिनिसंस्कृतवैदिकविश्वविद्यालयस्य पञ्चदशस्थापनादिवससमारोह: अगस्तमासस्यसप्तदशतमे दिनाङ्के वैक्रमाब्द:२०८० श्रावणशुक्लप्रतिपदा (17-08-2023) दिनाङ्के गुरुवासरे प्रात: एकादश वादनत: योगेश्वरश्रीकृष्णयोगभवन-देवासमार्गपरिसरस्य सभागारे समायोजितः आसीत् स्थापनादिवससमारोहस्य आध्यक्षत्वं विश्वविद्यालयस्य माननीयकुलपति: आचार्यविजयकुमार: सीजीमहोदय: निर्वहत् । विशिष्टातिथिरूपेण परमपूज्य: स्वामी-शान्तिस्वरूपानन्द: महामण्डलेश्वर: श्रीचारधाम-आश्रम:,उज्जयिनी,सारस्वतातिथिरूपेण आचार्य: रामदास: अत्रामवर्यः, मान्यकुलपति: डॉ. भीमराव-अम्बेडकरसामाजिक विज्ञानविश्वविद्यालय:, महू, इंदौरम्, विश्वविद्यालयस्य कार्यपरिषद्-विद्यापरिषद् सदस्याः च समुपस्थिताः आसन् । समारोहस्य शुभारम्भः सरस्वतीवन्दनया ,दीपदीप्नेन विश्वविद्यालयस्य कुलगानेन च जातम्।तदनु कार्यक्रमस्य संयोजकेन डॉ. तुलसीदासपारौहामहोदयेन प्रास्ताविकं स्वागतभाषणं च प्रस्तुतम्। समारोहेऽस्मिन् नवदेहलीस्थ केंद्रीयसंस्कृतविश्वविद्यालयस्य अष्टादशीपरियोजनान्तर्गतं स्वीकृता: परियोजनानां पीठस्योद्घाटनम्, विश्वविद्यालयस्य आचार्याणां पुस्तकानां विमोचनं,

पाणिनीयशोधपत्रिकायाः लोकार्पणम्, च जातम् । प्रदेशस्य राज्यपालः विश्वविद्यालयस्य कुलाधिपतयश्च माननीय: श्रीमगुभाईपटेलमहोदयस्य संदेशस्य वाचनं कुलपतिमहोदयेन कृतम्, समारोहेऽस्मिन् मध्यप्रदेशस्य उच्चशिक्षामन्त्री डॉ. मोहनयादवमहोदयस्य संदेशस्य वाचनं कुलसचिवमहोदयेन कृतम् अस्मिन्नवसरे संस्कृतविदुषी आचार्या इलाघोषमहोदया संस्कृतसेवाव्रती इति सम्मानेन सम्मानिता जाता ।विशिष्टातिथि रूपेण विराजमानेन स्वामीवर्येण उक्तं यत् पाणिनिसंस्कृतवैदिक विश्वविद्यालयस्य उज्जयिन्यां स्थापना इत्यस्माकं सौभाग्यम् उज्जैननगरस्य शिक्षाव्यवस्था अतिप्राचीना विश्वप्रसिद्धा च आसीत् 'भारतीयज्ञानपरम्परायाः प्रकाश: सर्वत्र प्रसरति अस्ति संस्कृतेः संरक्षणाय सम्यक् रूपेण शास्त्राणामध्ययनम् परमावश्यकम् अस्ति। संस्कृतच्छात्राणां कृते सर्वत्र अवसरा: वर्तन्ते केवलं मार्गदर्शनमपेक्षते'।

आचार्यरामदास अत्राम्वर्येण भारतीयज्ञानयात्रायाः स्वरुपं संस्कृतस्य प्रचार-प्रसारे च संस्कृतविश्वविद्यालयानां योगदानं इत्यादि विषये सत्रं संबोधितम् आध्यक्षीय उद्बोधने माननीयः कुलपतिः आचार्यविजयकुमारः सीजीमेननमहोदय: उक्तवान् विश्वविद्यालयस्य स्तम्भाः छात्राः भवन्ति अतः तेषां सर्वविध विकासाय अध्यापकाः निरन्तरं तेषां मार्गदर्शनाय प्रयत्नरताः सन्ति । भारतीय संस्कृतेः संरक्षणाय संस्कृतभाषाया: विकासाय च वयं संकल्पिता: भारतविश्वगुरुरूपेण पुनः प्रतिष्ठितः अस्ति। संस्कृते सर्वं सन्निहितं अस्ति। कुलपति महोदयेन वार्षिकं प्रतिवेदनमपि प्रस्तुतम् ।

अनन्तरं सांस्कृतिकार्यक्रमाणां प्रस्तुति: संस्कृतस्तोत्र, देशभक्तिगीतानां गायनं, छात्राणां योगनृत्यप्रस्तुति: च अभवन् समारोहेस्मिन् कालिदाससंस्कृत-अकादमी निदेशक: डॉ.संतोषपण्डयामहोदय: वराहमिहिर वेधशालाया: निदेशक: श्रीमान् राजेन्द्र

गुप्तमहोदयः श्रीराजेन्द्रझालानी, श्रीसुशीलवाडिया, डॉ.किरण यादव डॉ. विद्याजोशी, डॉ.सीमा शर्मा डॉ.योगेश्वरी फिरोजिया विश्वविद्यालयस्य वेद- व्याकरणविभागाध्यक्षः डॉ.अखिलेशकुमारद्विवेदी ,ज्योतिष विभागाध्यक्षः डॉ.शुभम् शर्मा, योगविभागाध्यक्षः डॉ. उपेन्द्रभार्गवः,डॉ.संकल्पमिश्रः सर्वे प्राध्यापकाः, छात्राः, शोधच्छात्राः, अभिभावकाः, सामाजिकाः वार्ताहराः च समुपस्थिताः आसन्। मञ्चसञ्चालनं सुश्रीपूजगौरमहोदयया श्रीसत्यवृतमहोदयेन च आभारप्रदर्शनञ्च कुलसचिवेन डॉ. दिलीपसोनीमहोदयेन कृतम्। कल्याण मन्त्रेण सह सभा समाप्ता जाता।
















# पाणिनिसंस्कृतविश्वविद्यालये विशिष्टव्याख्यानं सञ्जातम्

**वार्ता संयोजकः - डॉ.दिनेश: चौबे**

उज्जयिनीस्थमहर्षिपाणिनिसंस्कृतवैदिकविश्वविद्यालयस्य संस्कृतशिक्षणप्रशिक्षण-ज्ञानविज्ञान-संवर्धनकेन्द्रस्य तत्त्वावधाने संस्कृतसप्ताहसमारोहम् उपलक्ष्ये असप्ताहं यावत् केन्द्रेण नानाविदुषां विशिष्टव्याख्यानानि आयोज्यन्ते। अगस्तमासस्य 28-दिनाङ्कतः सितम्बरमासस्य 3-दिनाङ्कं यावत् अस्य कार्यक्रमस्य आयोजनं भवति। समारोहस्य उद्घाटनं 28 तमे दिनाङ्के अभूत्। कार्यक्रमस्य पञ्चमदिवसे शास्त्रसंरक्षणोपाया: इति विषये विशिष्टव्याख्यानं सञ्जातम्।अस्मिन् कार्यक्रमे काशीहिन्दुविश्वविद्यालयस्य संस्कृतविद्याधर्मविज्ञानसङ्कायस्य आचार्यः प्रो. व्रजभूषणओझा महोदय: मुख्यवक्तृरूपेण उपस्थित: आसीत् ।

गुरुकुलमाध्यमेन अस्माकं शास्त्राणि रक्षितानि भवेयुः। व्यवहारिकरूपेण आयुर्वेदादिशास्त्राणि कथं प्रयुक्तानि भवेयुरिति चिन्तनीयमस्माभिः। न कण्ठस्थी-करणेन अपि तु व्यवहारेणैव शास्त्राणां संरक्षणं भवेत्। शास्त्ररक्षणाय इतोऽपि नानाविधान्युपायानि तेन उक्तानि, यानि युट्युब्-मध्ये उपलभ्यते, भवद्भिः तत्रैव श्रूयताम्।

कार्यक्रमस्य आदौ वैदिकमङ्गलाचरणं तदनु विश्वविद्यालयस्य कुलगानं च अभवत्। व्याख्यानसत्राणां सत्राध्यक्षरूपेण विश्वविद्यालयस्य माननीयः कुलपतिः प्रो. सि. जी. विजयकुमारमेननमहोदयः आसीत्। महोदयेन सभा सम्बोधिता

संस्कृतसप्ताहसमरोहस्य शुभकामनाः च प्रदत्ता। कार्यक्रमसंयोजकः वेदव्याकरणविभागाध्यक्ष:, डॉ.अखिलेशकुमारद्विवेदीमहोदय: वर्तते। कार्यक्रमस्य सञ्चालनं डॉ.दिनेशचौबेमहोदयेन, आभारप्रदर्शनं डॉ. शङ्करबेरामहोदयेन कृतम्। कल्याण मन्त्रेण सह सभा समाप्ता जाता।



